भेदं व्यासेधाम:" इति भाष्य-भामतीनिबन्धाभ्यां प्रपञ्चस्य ब्रह्माभेदनिषेधादभेदाभ्युपगमेऽपसिद्धान्त इति वाच्यम्; तयोर्ब्रह्मरूपधर्मिसमानसत्ताकाभेदनिषेधे तात्पर्येण शुक्ति-रजतयोरिव प्रातीतिकाभेदाभ्युपगमेऽपि विरोधाभावात्—इति ॥

सङ्क्षेपशारीरककृतस्तु—ब्रह्मैवोपादानम्; कूटस्थस्य स्वतः कारणत्वानुपपत्तेर्माया द्वारकारणम्; अकारणमपि द्वारं कार्येऽनुगच्छति, मृद इव तद्गतश्लक्ष्णत्वादेरपि घटेऽनुगमनदर्शनात्—इत्याहुः ॥

वाचस्पतिमिश्रास्तु—जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्तमानतयोपादानमिति माया सहकारिमात्रम्, न कार्यानुगतं द्वारकारणम्—इत्याहुः ॥

सिद्धान्तमुक्तावलीकृतस्तु—मायाशक्तिरेवोपादानम्, न ब्रह्म, "तदेतद् ब्रह्मापूर्वमनपरमबाह्यम्" "न तस्य कार्यं करणं च विद्यते" इत्यादिश्रुतेः; जगदुपादानमायाधिष्ठानत्वेन तूपचाराद्उपादानम्; तादृशमेवोपादानत्वं लक्षणे विवक्षितम्—इत्याहुः ॥

अनेनैव निखिलप्रपञ्चरचनाकर्तृभावेनार्थसिद्धं सर्वज्ञत्वं ब्रह्मणः "शास्त्रयोनित्वात्" इत्यधिकरणे वेदकर्तृत्वेनापि समर्थितम् ॥

अथ कथं ब्रह्मणः सर्वज्ञत्वं सङ्गच्छते, जीववदन्तःकरणाभावेन ज्ञातृत्वस्यैवायोगात् ?

अत्र सर्ववस्तुविषयसकलप्राणिधीवासनोपरक्ताज्ञानोपाधिक ईश्वरः, अतस्तस्य सर्वविषयवासनासाक्षितया सर्वज्ञत्वमिति भारतीतीर्थादिपक्षः ॥

प्रकटार्थकारास्त्वाहुः—यथा जीवस्य स्वोपाध्यन्तःकरणपरिणामाश्च तत्प्रतिबिम्बग्राहिणः, इति तद्योगात् ज्ञातृत्वम्, एवं ब्रह्मणः स्वोपाधिमायापरिणामाश्चित्प्रतिबिम्बग्राहिणस्सन्तीति

तत्प्रतिबिम्बितैः स्फुरणैः कालत्रयवर्तिनोऽपि प्रपञ्चस्यापरोक्षेणाव-फलनात् सर्वज्ञत्वम्—इति ॥

तत्त्वशुद्धिकारास्तु—उक्तरीत्या ब्रह्मणो विद्यमाननिखिल-प्रपञ्चसाक्षात्कारसम्भवात् तज्जनितसंस्कारवत्तया च स्मरणोपप-त्तेरतीतसकलवस्त्ववभाससिद्धिः; सृष्टेः प्राङ् मायायाः सृज्यमान-निखिलपदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्तमानत्वात् तत्साक्षितया तदुपाधिकस्य ब्रह्मणोऽपि तत्साधकत्वसिद्धेः अना-गतवस्तुविषयविज्ञानोपपत्तिः—इति सर्वज्ञत्वं समर्थयन्ते ॥

कौमुदीकृतस्तु वदन्ति—स्वरूपज्ञानेनैव ब्रह्मणः स्वसंसृष्ट-सर्वावभासकत्वात् सर्वज्ञत्वम्; अतीतानागतयोरप्यविद्यायां चित्र-भित्तौ विमृष्टानुन्मीलितचित्रवत् संस्कारात्मना सत्त्वेन तत्संसर्ग-स्याप्युपपत्तेः; न तु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वम्; "तमेव भान्तमनु भाति सर्वम्" इति सावधारणश्रुतिविरोधात्, सृष्टेः प्राक् "एकमेवाद्वितीयम्" इत्यवधारणानुरोधेन महाभूतानामिव वृत्ति-ज्ञानानामपि प्रलयस्य वक्तव्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्तरूप ईक्षणे तत्पूर्वकमहाभूतादौ च स्रष्टृत्वाभा-वप्रसङ्गाच्च। एवं सति ब्रह्मणस्सर्वविषयज्ञानात्मकत्वमेव स्यात्, न तु सर्वज्ञातृत्वरूपं सर्वज्ञत्वमिति चेत्, सत्यम्, सर्वविषयज्ञानात्मकमेव ब्रह्म, न तु सर्वज्ञातृ, तस्य न कर्तृत्वरूपं ज्ञातृत्वमस्ति; अत एव "वाक्यान्वयात्" इत्यधिकरणे विज्ञातृत्वं जीवलिङ्गमित्युक्तं भाष्यकारैः। "यस्सर्वज्ञः" इत्यादिश्रुतिरपि द्रष्टृत्वावच्छिन्नजीव-रूपेणैव योजनीया—इति ॥

यद्यपि ब्रह्म स्वरूपचैतन्येनैव स्वसंसृष्टसर्वावभासकम्; तथापि तस्य स्वरूपेणाकार्यत्वेऽपि दृश्यावच्छिन्नरूपेण तु ब्रह्मकार्य-त्वात् "यस्सर्वज्ञः" इति ज्ञानजननकर्तृत्वश्रुतेरपि न कश्चिद्विरोध इति आचार्यवाचस्पतिमिश्राः—इति ॥ ओं तत्सत ॥